श्रीः

# अथ ऋग्वेदीया ऐतरेयोपनिषत्.



ओम् ॥ वाङ्मे मनसि प्रतिष्ठिता मनो
ऽचि प्रतिष्ठित मावि रावी र्म एधि वेदस्य
आणिस्थश्रुतं मे मा प्रहासी दनेना धीते
होरात्रा न्त्सन्दधा म्यृतं वदिष्यामि सत्यं
दिष्यामि तन्मा मवतु तद्वक्तार मवत्ववतु
मवतु वक्तार मवतु वक्तारम् ॥ ओम् शा
स्शान्ति श्शान्ति श्शान्तिः ॥

हरिः ओम्.



आत्मा वा इदमेक एवा ग्र आसीत् ना
न्यत्किञ्चन मिषत् स ईक्षत लोका न्नु

सृजा इति ॥ १ ॥ स इमां ल्लोका नसृजता
ऽम्भो मरीची र्मर मापोऽदोऽम्भः परेण दि
वं द्यौः प्रतिष्टाऽन्तरिक्षं मरीचयः पृथिवी
मरो या अधस्ता त्ता आपः ॥ २ ॥ स ईक्ष
तेमे नु लोका लोकपाला न्नु सृजा इति सो
ऽद्भ्य एव पुरुषं समृद्धृत्या मूर्छयत् ॥ ३ ॥ त
मभ्यतप त्तस्याभितप्तस्य मुखं निरभिद्यत य
थाण्डं मुखा द्वा ग्वाचोऽग्नि र्नासिके निरभि
द्येतां नासिकाभ्यां प्राणः प्राणा द्वायु रक्षिणी
निरभिद्येतां अक्षिभ्यांचक्षु श्चक्षुष आदित्यः
कर्णौ निरभिद्येतां कर्णाभ्यां श्रोत्रं श्रोत्रा द्दिश
स्त्व ङ्निरभिद्यत त्वचो लोमानि लोमभ्य
ओषधिवनस्पतयो हृदयं निरभिद्यत हृदया
न्मनो मनस श्चन्द्रमा नाभि र्निरभिद्यत ना
भ्या अपानोऽपाना न्मृत्युः शिश्नं निरभिद्यत

शिश्ना द्रेतो रेतस आपः ॥ ४ ॥

इति प्रथमः खण्डः.

———

ता एता देवता स्सृष्टा अस्मि न्महत्यर्ण
वे प्रापतन् त मशनाया पिपासाभ्या मन्व
वार्जत् ता एन मब्रुव न्नायतनं नः प्रजानी
हि यस्मि न्प्रतिष्ठिता अन्न मदामेति ॥ १ ॥
ताभ्यो गा मानय त्ता अब्रुव न्नवै नोऽय म
लं मिति ताभ्योऽश्व मानय त्ता अब्रुव न्न
वै नोऽय मलं मिति ॥ २ ॥ ताभ्यः पुरुष
मानय त्ता अब्रुन् सुकृतं बतेति पुरुषो वा
व सुकृत न्ता अब्रवी द्यथायतनं प्रविशतेति
॥ ३ ॥ अग्नि र्वाग्भूत्वा मुखं प्राविश द्वायुः
प्राणो भूत्वा नासिके प्राविश दादित्य श्चक्षु
र्भूत्वाऽक्षिणी प्राविश द्दिश श्श्रोत्रं भूत्वा क

णौं प्राविश न्नोषधिवनस्पतयो लोमानि भू
त्वा त्वच म्प्राविशं श्चन्द्रमा मनो भूत्वा हृद
यं प्राविश न्मृत्युरपानो भूत्वा नाभिं प्रावि
श दापो रेतो भूत्वा शिश्नं प्राविशन् ॥ ४ ॥
त मशनायापिपासे अब्रूता मावाभ्या मभि
प्रजानीहीति स ते अब्रवी देता स्वेव वां देव
ता स्वाभजा म्येतासु भागिन्यौ करोमीति
तस्मा द्यस्यै कस्यैच देवतायै हवि र्गृह्यते भा
गिन्या वेवास्या मशनायापिपासे भवतः॥५॥

इति द्वितीयः खण्डः.

---

स ईक्षतेमे नु लोकाश्च लोकपालाश्चा न्न
मेभ्य स्सृजा इति ॥ १ ॥ सोऽपोऽभ्यतप
त्ताभ्योऽभितप्ताभ्यो मूर्तिं रजायत यावै सा
मूर्ति रजायता न्नं वै तत् ॥ २ ॥ त देव द

भिसृष्टं नद त्पश डन्स्यजिघांस त्तद्वाचा जिघृ
क्षं त्तन्नाशक्नो द्वाचा ग्रहीतुं स यद्धैन द्वाचा-
ग्रहैष्य दभिव्याहृत्य हैवान्न मत्रप्स्यत् ॥ ३ ॥
तत्प्राणेना जिघृक्ष त्तन्नाशक्नो त्प्राणेन ग्रहीतुं
स य द्धैन त्प्राणे नाग्रहैष्य दभिप्राणच्च हैवा
न्न मत्रप्स्यत् ॥ ४ ॥ त च्चक्षुषा-जिघृक्ष त्त
न्नाशक्नो च्चक्षुषा ग्रहीतुं स यद्धैन च्चक्षुषा-ग्र
हैष्य दृष्ट्वा हैवान्न मत्रप्स्यत् ॥ ५ ॥ त च्छ्रो
त्रेणा जिघृक्ष त्तन्नाशक्नो च्छ्रोत्रेण ग्रहीतुं स
यद्धैन च्छोत्रेणा ग्रहैष्य च्छ्रुत्वा हैवान्न मत्र
प्स्यत् ॥ ६ ॥ त त्त्वचा जिघृक्षत्तन्नाशक्नो त्त्व
चा ग्रहीतुं स यद्धैनं त्त्वचा-ग्रहैष्य त्स्पृष्ट्वा
हैवान्न मत्र प्स्यत् ॥ ७ ॥ त न्मनसा-जिघृक्ष
त्तन्नाशक्नो न्मनसा ग्रहीतुं स यद्धैन न्मनसा
ग्रहैष्य द्ध्यात्वा हैवान्नमत्रप्स्यत् ॥ ८ ॥ त च्छि

श्नेना जिघृक्ष त्तन्नाशक्नो च्छिश्नेन ग्रहीतुं स यद्धैन च्छिश्नेना ग्रहैष्य द्विसृज्य हैवान्न मत्रप्स्यत् ॥ ९ ॥ त दपानेनाजिघृक्ष त्तदावय त्सएषोऽन्नस्य ग्रहो यद्वायु रन्नायु र्वा एष यद्वायुः ॥ १० ॥ स ईक्षत कथन्न्विदं मद्दते स्यादिति स ईक्षत कतरेण प्रपद्या इति स ईक्षत यदि वाचाऽभिव्याहृतं यदि प्राणेना भिप्राणितं यदि चक्षुषा दृष्टं यदि श्रोत्रेण श्रु तं यदि त्वचा स्पृष्टं यदि मनसा ध्यातं यद्य पानेना भ्यपानितं यदि शिश्नेन विसृष्ट मथ कोऽह मिति ॥ ११ ॥ स एत मेव सीमा नं विदार्यैतया द्वारा प्रापद्यत सैषा विदृति र्नाम द्वा स्त देत न्नान्दनं तस्य त्रय आवस था स्त्रय स्स्वप्ना अय मावसथोऽय मावस थोऽय मावसथ इति ॥१२॥ स जातो भू

ता न्यभिव्यैक्षत् किमिहान्यं वा वदिषदिति
सएत मेव पुरुषं ब्रह्म ततममपश्य दिद म
दर्श मितीा ॥ १३ ॥ तस्मा दिन्द्रो नामे द
न्द्रो हवै नाम त मिन्द्रं संप्त मिन्द्र मित्याच
क्षते परोक्षेण परोक्ष प्रिया इवहि देवाः परो
क्ष प्रिया इवहि देवाः ॥ १४ ॥

इति तृतीयः खण्डः.

---

इत्यैत्तरेयोपनिषदि पथमोऽध्यायः.

हरिः ओम्.

---

अथ द्वितीयोध्यायः.

हरिः ओम्.

पुरुषे हवा अय मादितो गर्भो भवति
यदेत द्रेत स्तदेत त्सर्वेभ्योऽङ्गेभ्य स्तेज
स्सम्भृत मात्म न्येवात्मानं बिभर्ति तद्यदा

स्त्रियां सिञ्च त्यथैतं जनयति तदस्य प्रथमं जन्म ॥ १ ॥

इति पथमः खण्डः

———

तत् स्त्रिया आत्मभूयं गच्छति यथास्व मङ्गं तथा तस्मा देनां नहिनस्ति सास्यैत मात्मान मत्र गतं भावयति ॥ १ ॥ सा भा वयित्री भावयितव्या भवति तं स्त्री गर्भं बि भर्ति सोऽग्र एव कुमारं जन्मनोऽग्रेऽधिभा वयति स य त्कुमारं जन्मनोऽग्रेऽधिभावय त्यात्मान मेव तद्भावय त्येषां लोकानां सन्त त्या एवं सन्तता.हीमे लोका स्तदस्य द्वितीयं जन्म ॥ २ ॥

———

इति द्वितीयः खण्डः



सो स्याय मात्मा पुण्येभ्यः कर्मभ्यः प्रति

निधीयते अथा स्याय मितर आत्मा कृतकृ
त्यो वयोगतः प्रैति स इतः प्रय न्नेव पुन
र्जायते त दस्य तृतीयं जन्म तदुक्त मृषि
णा ॥ १ ॥ ———

इति तृतीयः खण्डः.

गर्भे नुस न्नन्वेषा मवेद महं देवानां ज
निमा विश्वा । शतं मा पुर आयसीररक्ष न्न
धश्श्येनो जवसा निरदीय मिति । गर्भएवैत
च्छयानो वामदेव एव मुवाच ॥ १ ॥ सएवं
विद्वा नस्मा च्छरीरभेदा दूर्ध्व उत्क्रम्था मु
ष्मिन् स्वर्गे लोके सर्वान् कामा नाप्त्वाऽमृ
तस्समभव त्समभवत् ॥ २ ॥

इति चतुर्थः खण्डः.

इत्यैतरेयोपनिषदिद्वितीयोऽध्यायः.

हरिः ओम्.

———

अथ तृतीयो ध्यायः.

हरिः ओम्.

कोऽयमात्मेति वय मुपास्महे कतरस्स आत्मा येन वारूपं पश्यति येन वा शब्दं शृणोति येन वा गन्धा नाजिघ्रति येन वा वाचं व्याकरोति येन वा स्वादु चा स्वादुच विजानाति ॥ १ ॥ यदे त ह्रृदयं मन श्चैतत् सञ्ज्ञान माज्ञानं विज्ञानं मेधा दृष्टि र्धृति र्मति र्मनीषा जूति स्स्मृति स्संकल्पः क्रतु रसुः कामो वश इति सर्वाण्येवैतानि प्रज्ञान स्य नामधेयानि भवन्ति ॥ २ ॥ सएष ब्रह्मैष इन्द्र एष प्रजापति रेते सर्वेदेवा इमा निच पञ्चमहाभूतानि पृथिवी वायु राकाश आपो ज्योतींषी त्येतानीमानि च क्षुद्रामि श्राणीव बीजानी तराणि चेतराणि चाण्डजा

नि च जारुजानिच स्वेदजानि चोद्भिज्जानि चाश्वा गावः पुरुषा हस्तिनोयत्किञ्चेदं प्राणि जङ्गमंच पतत्रिच यच्च स्थावरं सर्वं तत्प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितं प्रज्ञानेत्रो लोकः प्रज्ञा प्रतिष्टा प्रज्ञानं ब्रह्म ॥ ३ ॥ स एतेनैव प्रज्ञानात्मना स्मा ल्लोका दुत्क्रम्या मुष्मिन् स्वर्गे लोके सर्वान् कामा नाप्त्वा,मृत स्समभव त्समभव दित्योम् ॥ ४ ॥

वाङ्मेमनसीति शान्तिः.

इत्यैतरेयोपनिषदितृतीयोध्यायः.

हरिः ओम्.

इत्यैतरेयोपनिषत्.